# Devikrita Bhairavastutih

# देवीकृता भैरवस्तुतिः

## Sanskrit Document Information



Text title : bhairavastutiH

File name : bhairavastuti.itx

Category : shiva

Location : doc_shiva

Transliterated by : DPD

Proofread by : DPD

Description/comments : gorakShasaMhitAyAM prathamaH paTalAntargate

Latest update : May 6, 2018

Send corrections to : Sanskrit@cheerful.com



May 4, 2019

*sanskritdocuments.org*

# देवीकृता भैरवस्तुतिः



नित्यानन्दं परं शान्तं निष्कलं च निरामयम् ।
व्योमातीतं परं शून्यं भैरवं तं नमाम्यहम् ॥ १॥

परात्परतरं शान्तं शुद्धमत्यन्तनिर्मलम् ।
भूतं येन जगत्सर्वं भैरवं तं नमाम्यहम् ॥ २॥

इडापिङ्गलयोर्मध्ये निश्वाशोच्छ्वासचारिणम् ।
द्वादशान्ते लयं यस्य भैरवं तं नमाम्यहम् ॥ ३॥

कुण्डल्यां तु लयं यस्य परान्ते विलयं पुनः ।
हरत्यमृतरूपेण भैरवं तं नमाम्यहम् ॥ ४॥

अकुलाकुलसम्भूतं कुलोत्पत्तिविवर्जितम् ।
विश्वरूपं परं नित्यं भैरवं तं नमाम्यहम् ॥ ५॥

कलाकलङ्करहितं निर्विकारं निरञ्जनम् ।
शून्याच्छून्यतरं शून्यं भैरवं तं नमाम्यहम् ॥ ६॥

आपातालमूर्ध्निस्थं कन्दनालसमास्तृतम् ।
हंसरूपं निराभासं भैरवं तं नमाम्यहम् ॥ ७॥

आकाशज्योतिमारूढं व्योमातीतं निरामयम् ।
व्योमव्यापि परंव्योम भैरवं तं नमाम्यहम् ॥ ८॥

चन्द्रार्कवह्निमध्यस्थं दृष्टादृष्टैकगोचरम् ।
रूपारूपविनिर्मुक्तं भैरवं तं नमाम्यहम् ॥ ९॥ अनाख्यं च निराभासं

नाडिकार्णवसम्भूतं मन्त्रजालप्रकाशस्थ ।
अतीतगोचरं शम्भुं भैरवं तं नमाम्यहम् ॥ १०॥

हकारार्द्धं परं सूक्ष्मं परानन्दं परात्परम् ।
परस्यान्ते परे लीनं भैरवं तं नमाम्यहम् ॥ ११॥

घण्टिकान्ते परं शान्तं ब्रह्मरन्ध्रविनिर्गतम् ।
आकाशं निर्मलं सूक्ष्मं भैरवं तं नमाम्यहम् ॥ १२॥

अखण्डनिर्मलं शुद्धं कला कल्पविवर्जितम् । कल्पा कल्प
नित्यं प्रमेयरहितं भैरवं तं नमाम्यहम् ॥ १३॥

यथा भानुगता रश्मिमव्याँपयेन्निखिलं जगत् । भानुगतो
तथा सर्वगतं देवं भैरवं तं नमाम्यहम् ॥ १४॥

नादान्तबिन्दुसंलीनं शक्त्यातीतमगोचरम् ।
मालिन्यङ्गसमुद्भूतं भैरवं तं नमाम्यहम् ॥ १५॥

अनिलानलसंयुक्तं व्यापकं परमेश्वरम् ।
भुवनत्रयसंलीनं भैरवं तं नमाम्यहम् ॥ १६॥

अकारादिक्षकारान्तं कुलपिण्डसमुद्भवम् ।
कारात्रिशस्वरूपस्थं भैरवं तं नमाम्यहम् ॥ १७॥

यथा जलगता सूर्यश्चन्द्रश्चाप्सु व्यवस्थितः ।
तथा सर्वगतं देवं भैरवं तं नमाम्यहम् ॥ १८॥

यथा चाग्निगतं तेजो यथा वायुः स्वरूपतः ।
तथा सर्वगतं देवं भैरवं तं नमाम्यहम् ॥ १९॥

पृथिव्यापस्तथा तेजो वायुराकाश एव च ।
पञ्चभूतगतं देवं भैरवं तं नमाम्यहम् ॥ २०॥

शब्दस्पर्शरूपरसगन्धतन्मात्रपञ्चकम् ।
एतद्व्याप्य स्थितं देवं भैरवं तं नमाम्यहम् ॥ २१॥

वाक्पाणिपादपायूपस्थपञ्चकसंस्थितम् ।
पञ्चकर्मेन्द्रियैः संस्थं भैरवं तं नमाम्यहम् ॥ २२॥

श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ।
पञ्चेन्द्रियसुसम्भूतं भैरवं तं नमाम्यहम् ॥ २३॥

कामः क्रोधस्तथा लोभो मोहश्चैव चतुष्टयम् ।
अन्तःकरणसम्भूतं भैरवं तं नमाम्यहम् ॥ २४॥

पक्षिकीटैस्तथा वृक्षैर्लतागुल्मसरीसृपैः ।
सर्वं व्याप्य स्थितं शम्भुं भैरवं तं नमाम्यहम् ॥ २५॥

विकल्पकल्परहितं कल्पनातीतगोचरम् ।
विकल्परहितं शान्तं भैरवं तं नमाम्यहम् ॥ २६॥

युगान्तं युगरूपेण अक्षयं चाव्यवस्थितम् ।
सर्वव्यापि परं ब्रह्म भैरवं तं नमाम्यहम् ॥ २७॥

सर्वतत्त्वगतं सूक्ष्मं ज्ञानध्यानपरायाणम् ।
निर्लक्षं परमं शुद्धं भैरवं तं नमाम्यहम् ॥ २८॥

सिद्धमातरयोगिन्यैर्गुह्यकैः पालकैस्तथा ।
पूजितं पादपद्मं च भैरवं तं नमाम्यहम् ॥ २९॥

एवं देव्या स्तुतः शम्भुः परानन्दाकुलेक्षणम् ।
भैरवो हृष्टमनसा प्रोत्फुल्लकमलाननः ॥ ३०॥

प्रसन्नो वरदो देवो वाक्यं चेदमुवाच ह ।
साधु साधु महाभागे तुष्टोऽहं भक्तवत्सले ॥ ३१॥

॥ इति गोरक्षसंहितायां प्रथमः पटलान्तर्गते भैरवस्तुतिः समाप्ता ॥

---

*Devikrita Bhairavastutih*

pdf was typeset on May 4, 2019

Please send corrections to *sanskrit@cheerful.com*

